# પાઠ ૧૬

હવે આ પાઠના ઉકારાંત પુલ્લિંગ શબ્દો મોઢે કરો—

| | | | |
|---|---|---|---|
| प्रभुः | = ઇશ્વર, માલિક | वायुः | = વાયુ, હવા |
| इक्षुः | = શેરડી | भानुः | = સૂર્ય |
| मेरुः | = મેરૂ પર્વત | विन्दुः | = બિન્દુ |
| सेतुः | = પુલ, સેતુ | इषुः | = બાણ |
| सक्तुः | = જવ, સથવો | स्तनयित्नुः | = મેઘ, વાદળાં |

## संस्कृत-वाक्यानि।

१ गृहस्य प्रभुः गृहस्थः । २ राष्ट्रस्य प्रभुः नृपतिः । ३ विश्वस्य प्रभुः विष्णुः अस्ति । ४ सः सक्तुं तितउना पुनाति । ५ वस्त्रेण घृतं सः पुनाति । ६ सत्येन मनः शुद्ध्यति । ७ अहं सक्तुं खादामि । ८ इक्षोः मधुरः रसः भवति । ९ भानोः प्रकाशः प्रखरः भवति । १० रामेण इषुणा रावणः हतः । ११ स्तनयित्नुः आकाशे गर्जति । १२ जन्तोः शरीरे वायुः एव प्राणः भवति । १३ चातकः जलविन्दुं इच्छति । १४ सक्तुः वलप्रदः अस्ति । १५ यदा सक्तुः इक्षोः रसेन सह भावितः भवति तदा एव सः वलप्रदः भवति । १६ आकाशात् वृष्टिः विन्दुरूपेण भवति । १७ तत्र शोभनः सेतुः अस्ति ।

## ગુજરાતી વાક્યો

૧ ઘરનો સ્વામી ગૃહસ્થ છે. ૨ રાજ્યનો સ્વામી રાજા છે. ૩ વિશ્વનો સ્વામી વિષ્ણુ છે. ૪ તે લોટને ચાળણીથી શુદ્ધ કરે છે. ૫ તે કપડાથી ઘી ગાળે છે. ૬ સત્યથી મન શુદ્ધ થાય છે. ૭ હું જવ

ખાઉં છું. ૮ સૂર્યનો પ્રકાશ પ્રખર હોય છે. ૯ શેરડીનો રસ મીઠો હોય છે. ૧૦ રામે બાણુથી રાવણને માર્યો. ૧૧ વાદળાં આકાશમાં ગરજે છે. ૧૨ પ્રાણીઓના શરીરમા વાયુ જ પ્રાણ બને છે. ૧૩ ચાતક પક્ષી જળ બિંદુ ચાહે છે. ૧૪ જવ શકિત આપે છે. ૧૫ જો જવ શેરડીના રસની સાથે ખાવામાં આવે તો તે શકિત-વર્ધક હોય છે ૧૬ આકાશમાથી વૃષ્ટિ બિંદુરૂપમાં થાય છે. ૧૭ ત્યાં સુંદર પૂલ છે

## સંધિ કરેલાં વાકયો

१ गृहस्य प्रभुर्गृहस्थोऽस्ति । अस्ति गृहस्थो गृहस्य प्रभुः । प्रभुर्गृहस्यास्ति गृहस्थः ।

२ राष्ट्रस्य प्रभुर्नृपतिरेवास्ति । नृपतिरेव प्रभू राष्ट्रस्याति । राष्ट्रस्य नृपतिरेव प्रभुरस्ति ।

३ विश्वस्य प्रभुर्विष्णुरस्ति । विष्णुरस्ति प्रभुर्विश्वस्य । प्रभुर्विश्वस्य विष्णुरस्ति ।

४ रामेणेषुणा रावणो हतः । हतो रावणो रामेणेषुणा । इषुणा रावणो रामेण हतः ।

## ઉકારાન્ત વિશેષણ

હવે ઉકારાત વિશેષણો આપવામાં આવે છે એના રૂપો પહેલાં જણાવ્યા મુજબ જ થાય છે, ત્યારે એ શબ્દ ઉકારાત પુલ્લિંગ શબ્દોનો ગુણ બતાવે છે.

| | |
|---|---|
| भीरु = ડરપોક | वर्धिष्णु = ઉન્નત |
| श्रद्धालु = શ્રદ્ધા રાખવાવાળો | सहिष्णु = સહન કરનાર |

| | | | |
|---|---|---|---|
| निद्रालु | = ઊંઘેલો, સૂતેલો, નિદ્રાધીન | भूष्णु | = થનારૂં |
| पटु | = કુશળ | प्रभविष्णु | = બળવાન, મુખ્ય |

संस्कृत-वाक्यानि ।

१ भीरुः मनुष्यः यशस्वी न भवति । २ भीरुणा पुरुषेण किं कर्तव्यम् ? ३ पटुः जनः एव सर्वं कर्म करोति । ४ वर्धिष्णुः नृपः साम्राज्यं प्राप्नोति । ५ प्रभविष्णुना नृपतिना राज्यं संवर्धितम् । ६ भीरुणा भूपतिना सर्वं राज्यं त्यक्तम् । ७ धर्मस्य तत्त्वं तस्य गुरुः एव जानाति । ८ विष्टरं अत्र आनय । ९ शूरः नृपः विजयं एव कांक्षति । १० भीरुः नृपः पलायनं करोति । ११ यस्य अर्थे युद्धं कृतं स एव भीरुः । १२ सः नृपतिः राज्यं धनं प्राणं च त्यक्त्वा युद्धे अवस्थितः । १३ आचार्यं गुरुं वा निहत्य पातकं भवति । १४ स्वबान्धवं हन्तुं त्वं न योग्यः । १५ पापेन निषादेन मृगः हतः । १६ स तुभ्यं वस्त्रं दातुं इच्छति । १७ अहं तस्मै धनं दातुं इच्छामि । १८ त्वं चक्रं भ्रामयितुं इच्छसि किम् ? १९ यदि न इच्छसि तर्हि किं कर्तुं इच्छसि ।

ગુજરાતી વાક્યો

૧ ડરપોક માણસ યશસ્વી થતો નથી. ૨ કાયર માણસે શું કરવું. ૩ કુશળ માણસ બધાં કાર્યો કરે છે. ૪ રાજ્ય વધારવાની ઇચ્છા-વાળો રાજા સામ્રાજ્ય પ્રાપ્ત કરે છે. ૫ બળવાન રાજાએ રાજ્ય વધાર્યું. ૬ કાયર રાજાએ આખું રાજ્ય ગુમાવ્યું. ૭ ધર્મ-તત્ત્વ તેનો ગુરુ જ જાણે છે. ૮ ખુરશી અહીં લાવ. ૯ બહાદુર રાજા વિજય જ

ઇચ્છે છે. ૧૦ બાયલો રાજા પલાયન કરે છે. ૧૧ જેને માટે લડાઈ લડી તે બાયલો છે. ૧૨ તે રાજા રાજ્ય, ધન અને પ્રાણ (ત્યાગીને) છોડીને લડાઇમાં ઊભો છે. ૧૩ આચાર્ય અથવા તો ગુરુની હત્યા કરવાથી પાપ લાગે છે. ૧૪ તારા ભાઇઓને મારવા માટે તું લાયક નથી. ૧૫ પાપી શિકારીએ હરણને માર્યું. ૧૬ તે તને વસ્ત્ર આપવા ઇચ્છે છે. ૧૭ હું તેને ધન આપવા ઇચ્છું છું ૧૮ તું ચક્ર ફેરવવા ઇચ્છે છે શું ? ૧૯ જો નથી ઇચ્છતો તો શું કરવા ઇચ્છે છે.

સંધિ કરેલાં વાક્યો

१ भीरुर्मनुष्यो यशस्वी न भवति । न भवति यशस्वी भीरुर्मनुष्यः ।

२ पटुर्जन एव सर्वं कर्म करोति। करोति सर्वं कर्म पटुर्मनुष्यः। सर्वं कर्म पटुरेव मनुष्य करोति ।

३ भीरुर्नृपः पलायनं करोति । करोति पलायनं भीरुर्नृप. । पलायनं करोति भीरुर्नृप ।

समासाः ।

१ गृहस्थः = गृहे तिष्ठति इति गृहस्थः ।
२ जलबिंदुः = जलस्य बिन्दु जलबिन्दुः ।
३ बलप्रदः = बलं प्रददाति इति बलप्रदः ।
४ यशस्वी = यशः अस्य अस्ति इति यशस्वी ।
५ नृपतिः = नृणां पतिः नृपतिः ।
६ भूपतिः = भूम्याः पतिः भूपतिः ।
७ नृपः = नॄन् पाति इति नृप. ।
८ स्वबान्धवः = स्वस्य बांधव स्वबांधवः ।

## પાઠ ૧૭

હુંવે આ પાઠના નીચે લખેલા શ્લોકો વાંચો—

स्वधर्ममपि चावेक्ष्य न विकंपितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥
( भ. गी. २।३१ )

पदानि-स्व+धर्म+अपि । च । अवेक्ष्य । न । वि+कंपितुं । अर्हसि । धर्म्यात् । हि । युद्धात् । श्रेयः । अन्यत् । क्षत्रियस्य । न । विद्यते ॥

अन्वयः-अपि च स्वधर्मं अवेक्ष्य विकंपितुं न अर्हसि । हि क्षत्रियस्य धर्म्यात् युद्धात् अन्यत् श्रेयः न विद्यते ।

અર્થ- અને પોતાની ફરજ ( *अवेक्ष्य* )જોઈને ( *वि+कंपितुं* ) કંપાયમાન થવાને ( न अर्हसि ) તું લાયક નથી. ( हि ) કારણ કે ક્ષત્રિયોને માટે ધર્મ યુદ્ધથી બીજું ( श्रेयः ) કલ્યાણકારી કંઈ પણ ( न विद्यते ) નથી.

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥
( भ. गी. २।३२ )

पदानि- यदृच्छया । च । उपपन्नं । स्वर्ग+द्वारं । अपावृतं । सुखिनः । क्षत्रियाः । पार्थ । लभन्ते । युद्धं । ईदृशम् ॥

अन्वयः-पार्थ, यदृच्छया उपपन्नं अपावृतं च स्वर्गद्वारं, ईदृशं युद्धं सुखिनः क्षत्रियाः लभन्ते ॥

અર્થ- હે ( पार्थ ) પૃથા પુત્ર અર્જુન ! ( यदृच्छया ) વગર

પ્રયત્ને ( उपपन्नं ) મેળવેલું અને ( अपावृतं ) સ્વર્ગના ઉઘડેલા દ્વાર જેવું આ યુદ્ધ ( सुखिनः ) આનંદિત ક્ષત્રિયોને મળ્યું છે.

अथचेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ।
ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥
( भ. गी. ४।३३ )

पदानि-अथ । चेत् । त्वं । इमं । धर्म्यं । संग्रामं । न । करिष्यसि । ततः । स्वधर्मं । कीर्तिं । च । हित्वा । पापं । अवाप्स्यसि ॥

अन्वयः-अथचेत् त्वं इमं धर्म्यं संग्रामं न करिष्यसि । ततः स्वधर्मं कीर्तिं च हित्वा पापं अवाप्स्यसि ।

અર્થ- ( अथ चेत् ) અને જો તું આ ધર્મરૂપ ( संग्रामं ) લડાઈ નહિ લડશે ( ततः ) તો તારી ફરજ અને આબરૂ ( हित्वा ) ગુમાવીને પાપ જ ( अवाप्स्यसि ) મેળવશે

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
संभावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥
( भ. गीता २।३४ )

पदानि-अ+कीर्तिं । च । अपि । भूतानि । कथयिष्यन्ति । ते । अव्ययाम् । संभावितस्य । च । अकीर्तिः । मरणात् । अतिरिच्यते ॥

अन्वय -भूतानि ते अव्ययां अकीर्तिं च अपि कथयिष्यन्ति । संभावितस्य च अकीर्तिः मरणात् अतिरिच्यते ॥

भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥
( भ. गी. २।३५ )

पदानि-भयात् । रणात् । उपरतं । मंस्यन्ते । त्वां । महारथाः । येषां । च । त्वं । बहुमतः । भूत्वा । यास्यसि । लाघवम् ॥

अन्वयः-महारथाः त्वां भयात् रणात् उपरतं मंस्यन्ते । त्वं येषां बहुमतः भूत्वा लाघवं यास्यसि ॥

અર્થ-- યોદ્ધાઓ તને ભયથી લડાઇમાંથી ભાગેલો માનશે. અને ( येषां ) જેને તું આ વખતે ( बहुमतः ) વહાલો છે, તેનાજ મનમાં તું ( लाघवं यास्यसि ) નાનો બની જશે. ( અપ્રિય બનશે )

हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौंतेय युद्धाय कृतनिश्चयः ॥
( भ. गी.२।३७ )

पदानि-हतः । वा । प्राप्स्यसि । स्वर्गं । जित्वा । वा । भोक्ष्यसे । महीम् । तस्मात् । उत्तिष्ठ । कौंतेय । युद्धाय । कृत+निश्चयः ॥

अन्वयः-हतः वा स्वर्गं प्राप्स्यसि, जित्वा वा महीं भोक्ष्यसे । हे कौंतेय ! तस्मात् युद्धाय कृतनिश्चय उत्तिष्ठ ॥

અર્થ -(हतः) મરણ પામશે તો સ્વર્ગને ( प्राप्स्यसि ) પામશે. અને ( जित्वा ) જીતશે તો પૃથ્વી ( भोक्ष्यसे ) ભોગવશે. ( પૃથ્વી-પતિ બનશે ) હે ( कौंतेय ) અર્જુન ! એથી લડાઇ લડવાનો નિશ્ચય કરીને ( उत्तिष्ठ ) ઊઠ.

અત્યાર સુધીમાં જે શ્લોકો આવ્યા છે, તે બધા ઓછામાં ઓછા

દસ વાર વાચો અથવા તો એટલીવાર વાચો કે વાચતા વાચતા જ અર્થ ધ્યાનમા આવી જાય.

જો તમો શ્લોકો ધીમે ધીમે વાંચશો તો સરળતાથી તમારા ધ્યાનમા ભાવ આવી જશે.

તથા દરેક શ્લોકનું પદ, અન્વય અને અર્થ જાતે કરવાની પણ સાથે સાથે ટેવ પાડો.

## સંધિ કરેલાં વાકયો

१ महारथास्त्वां भयाद्रणादुपरतं मंस्यन्ते । मंस्यन्ते त्वा रणाद्भयादुपरतं महारथा । रणाद्भयादुपरतं मंस्यन्ते त्वां महारथा. ।

२ त्वं येषां बहुमतो भूत्वा लाघवं यास्यसि। येषा त्वं बहुमनो भूत्वा लाघवं यास्यसि ।

३ हतो वा स्वर्ग प्राप्स्यसि । जित्वा वा महीं भोक्ष्यसे । कौन्तेय ! तस्मान् युद्धाय कृतनिश्चय उत्तिष्ठ ।

समासा ।

१ स्वधर्म = स्वस्य धर्म स्वधर्म ।
२ स्वर्गद्वारं = स्वर्गस्य द्वारं स्वर्गद्वारम् ।
३ अकीर्ति = न कीर्ति अकीर्ति ।
४ कृतनिश्चयः = कृत निश्चय येन स कृतनिश्चय ।
५ महारथ = महान् रथ यस्य सः महारथ ।

# पाठ १८

## संस्कृत—वाचन—पाठः ।

अहं वदामि । त्वं किं न वदसि ? स सर्वदा वदति । स तत्र किं न गच्छति ? कदा त्वं तत्र गमिष्यसि ? यदा त्वं वदसि तदा स किं न वदति । रामचन्द्रः किं न पठति ? यदा गोविंदः आगच्छति तदा एव गोपालः गच्छति ।

स आगच्छति किं ? त्वं सदा किं खादसि ? त्वं अधुना किं न वदसि ? स किं पुस्तकं पठति ? त्वं देवदत्तेन सह आगमिष्यसि किं ? यत्र पुस्तकं अस्ति तत्र पत्रं नास्ति । यथा अहं पठामि तथा त्वं किं न पठसि ? यदा अहं आगमिष्यामि तदा त्वं कुत्र गमिष्यसि ?

तस्य फलस्य रक्तः वर्णः अस्ति । मम वस्त्रस्य पीतः वर्णः । तस्य कमलस्य पीतः वर्णः अस्ति । वृक्षस्य पत्रस्य कः वर्णः अस्ति ? तस्य पत्रस्य श्वेतः वर्णः अस्ति । तत् पत्रं अत्र आनय । पुष्पं तत्र नय ।

रामचन्द्रस्य गृहं कुत्र अस्ति ? यत्र रामचन्द्रस्य गृहं अस्ति, तत्र एव मम गृहं अस्ति । त्वं भूपस्य शोभनं नगरं पश्यसि किं ? तस्य पुरुषस्य शोभनं वस्त्रं पश्य । स मया सह तत्र न आगच्छति । त्वं मया सह तत्र आगमिष्यसि किम् ?

अहं सत्वरं आगमिष्यामि परन्तु सः सत्वरं न आगमिष्यति । त्वं इदानीं पुस्तकं पठ । अहं पत्रं लिखामि । मया तस्मै धनं न

दत्तम्। त्वया तस्मै जलं अपि न दत्तम्। तस्य फलं कुत्र पतितम् ? यत्र स गत तत्र एव तस्य फल पुस्तक च पतितम्। तत्र गच्छ तत् फल पश्य।

यथा त्वं लिखसि तथा स न लिखति। यथा त्वं वदसि तथा अह अपि न वदामि। स वीर पुरुष कुत्र गत ? यदा स तत्र भविष्यति तदा त्वं कुत्र भविष्यसि ? यदि अधुना त्वं अन्नं खादसि तर्हि अत्र एव त्व जलं अपि पिब। तेन परा शान्ति प्राप्स्यसि।

यत्र तव पुत्र अस्ति तं देश त्वं अधुना एव गच्छ। स कदा वृक्षस्य समीपं गमिष्यति ? तुभ्यं नारायणेन किं पुस्तकं दत्तम् ? त्वया तत् कुत्र रक्षितं अस्ति ? अह सायकाले कुत्र अपि नैव गमिष्यामि। यथा अश्व धावति तथा गर्दभ न धावति। यत् भविष्यति तत् एव भविष्यति। तथा यत् न भविष्यति तत् नैव भविष्यति।

वृक्ष तत्र पतति। तत्र मूषक धान्यं खादति। तस्मिन् गृहे श्वेतं वस्त्रं इदानीं नास्ति। यदा त्व तत् श्वेत वस्त्रं तत्र नेष्यसि तदा एव अह तत्रैव आगमिष्यामि। यदि त्व तत्र न भविष्यसि तर्हि क तत्र भविष्यति ?

समासा।

१ गोपाल = गो पाल गोपाल।
२ देवदत्त = देवै दत्त देवदत्त।
३ भूप = भुव पाति इति भूप।



# પાઠ ૧૯

संस्कृत—वाचन—पाठः ।

तव पुत्र इदानीं कुत्र गतः ? तं त्वमधुना पश्यसि किम् ? केन स इदानीं नीतः ? कुत्र नीतः ? त्वं जानासि किम् ?

कदा स आगमिष्यति ? केन सह आगमिष्यति ? कस्मात् स्थानात् केन सह कदा स पुनरागमिष्यति ?

कथं तस्मिन्पङ्के स वृषभः पतितः ? स वृषभस्तस्मिन्पंके केन वा पातितः ? कथं स तत्र गतः ?

मम मञ्चकोऽत्र नास्ति। केन स अद्यैव नीतः ? किमर्थं मम मंचकस्तेन नीतः ?

अस्य गृहस्यैष भागो ममैवास्ति । ममैवास्त्यस्य गृहस्यैष भागः । अस्य गृहस्यान्यो भागः कस्यास्ति ?

पुत्रेण फलं नानीतम् । किमर्थं तेन पुत्रेण फलं नानीतम् ? अद्य न तेन पुत्रेण फलमानीतम् ।

तस्य मंचकस्य समीपमेव विष्टरोऽस्ति । केन रक्षितो विष्टरस्तस्य मंचकस्य समीपम् । मया तस्य मंचकस्य समीपमेव विष्टरो रक्षितः ।

कृष्णदुर्गो विजयदुर्गस्य समीपमेवास्ति । अहं विजयदुर्गस्य मार्गं जानामि। कृष्णदुर्गस्य मार्गं न जानामि। त्वं जानासि किम् ?

लङ्कानगरे रावणः राज्यं करोति । तेन रावणेन किं कृतम् ? रामेण किमर्थं तस्य वधः कृतः ?

रामेण वाणेन रावणस्य वधः कृतः । रावणो राक्षसोऽस्ति । राक्षसो दुष्टो भवति । दुष्टः पुरुषः पीडको भवति ।

यथा व्याघ्रो वने भवति तथा अश्वो ग्रामे भवति। तथा गृहे बिडालोऽपि भवति।

हस्ते भूषणं भवति। मुखेऽन्नं भवति। वृक्षे फलं भवति। दीपे प्रकाशो भवति। सूर्ये प्रभा भवति। समुद्रे जलं भवति।

साहसे श्रीर्भवति। ब्राह्मणे विद्या भवति। क्षत्रिये शौर्यं भवति।

तव द्वारपालेन मम पुस्तकं न नीतम्। तत् पुस्तकं तस्य द्वारपालेनाद्य नीतम्। कदा नीतम्? इदानीमेव नीतम्।

वीर आरोहत्यश्वम्। क्षत्रियो गजमारोहति। स पुरुषो गजमारोहति, नापि स अश्वमारोहति।

वीरो गच्छति। बालक आगच्छति। नरो वनं इदानीं गच्छति। विप्र पुस्तकं पठति। अश्वो वनात् तत्र आगतः। स तत्र तिष्ठति।

वैद्यो वत्साय ददाति रसम्। बालको रसं न पिबति। त्वमिदानीं तत्र गच्छ, यत्र स बालकोऽस्ति।

मूषकोऽन्नं खादति। न मूषकोऽन्नं खादति, परंतु बिडालो मोदकं भक्षयति। अद्य तस्मिन् गृहे मूषको नास्ति, परंतु तत्र बिडालोऽस्ति।

येनान्नं खादितं स नैष बिडालः। स कोऽपि अन्योऽस्ति। येन बिडालेन मूषको भक्षितः, स इदानीं कुत्र गतः?

इदानीं लेखको लेखनाय किं नागच्छति? यदा स आगच्छति तदा त्वं कुत्र गच्छसि? लेखक आगच्छति, परंतु लेखनं न करोति।

त्वया अद्योत्तमः पाकः कृतः। नहि नहि, स पाको मया न कृतः, परंतु मम मित्रेण हरिदत्तेन कृतः।

गोवत्सः किमर्थं धावति? तमत्रानय। यथा स अत्रैव तिष्ठति, तथा कुरु। येन मार्गेण स अत्रागच्छति, तेनैव मार्गेण तमानयात्र।

स पुरुषो बालकं न रक्षति। स उत्तमः पुरुषः शोभनं बालकमपि न रक्षति। किमर्थं स एवं करोति ? कुत्र स गच्छति ? किमर्थं स तत्र न गच्छति ?

यदा वीरो युद्धं प्रति गच्छति, तदा शस्त्रास्त्रेण सह गच्छति, तथा त्वमपि गच्छ। स्व-धर्मस्य रक्षणार्थं युद्धं कुरु। मनुष्येण रक्षितो धर्मो मनुष्यमेव रक्षति।

मम अत्रैव निवासोऽस्ति, अस्मिन् स्थाने तिष्ठामि, अस्मिन् स्थाने पठामि, अस्मिन् स्थाने भोजनं करोमि, तस्मिन् स्थाने स्नानं करोमि।

यथा त्वं जानासि तथा वद। कदापि असत्यं न वद। सत्यस्यैव वचनं श्रेयस्करं भवति, यदत्यन्तं भूतहितं, तदेव सत्यमिति शास्त्रस्य सिद्धान्तोऽस्ति।

यद्यत् परवशं तत्तत्सर्वं दुःखमेव भवति। यद्यत्स्ववशं तत्तत्सर्वं सुखकरं भवति। एतदेव सुखदुःखलक्षणमस्ति।

यन्त्रकारः कुत्र चक्रं भ्रामयति ? यत्र विश्वामित्रोऽस्ति तत्र स चक्रं भ्रामयति। यदा स चक्रं भ्रामयति, तदा सोऽन्यः पुरुषस्तत्र किं करोति ?

कस्मान्नगरात्स पुरुषोऽत्रागतः ? यदि स काशीनगरादेवागतस्तर्हि तेन सह भाषणं कर्तुमिच्छामि।

यदा त्वं नदीतीरं स्नानाय गमिष्यसि तदा वस्त्रं पात्रं च तत्र नय।

यदा रामचन्द्रः स्नानार्थं विष्णुगुप्तस्य गृहं गच्छति, तदा तत्र तस्य सेवकः अपि भवति। स उष्णं उदकं तस्य स्नानार्थं ददाति।

---

## પાઠ ૨૦

આ પાઠના નીચે લખેલા શ્લોકો વાંચો—

वरं वृणीष्व भद्रं ते यादृशं पुत्रमीप्सितम् ।
तथोक्तः प्राञ्जली राजा पुत्रं वव्रे गुणान्वितम् ॥
(महाभारत द्रोणपर्व ९६।२१)

पदानि-वरं । वृणीष्व । भद्रं । ते । यादृशं । पुत्रं । ईप्सितं । तथा+उक्तः । प्र+अञ्जलि । राजा । पुत्रं । वव्रे । गुण+अन्वितम् ॥

अन्वय-वरं वृणीष्व, ते भद्रं । यादृशं पुत्रं ईप्सितं । तथोक्तः राजा प्राञ्जलि गुणान्वितं पुत्रं वव्रे ।

અર્થ- ( वरं ) વરદાન ( वृणीष्व ) માગ ( ते ) તારૂ ( भद्रं ) કલ્યાણ થાઓ ( यादृशं ) તને જેવો ( पुत्र ) પુત્ર ( ईप्सितं ) જોઈએ તેવું વરદાન માગ

ભાવાર્થ- તને જેવો પુત્ર જોઈએ તેવુ વરદાન માગ. તારૂ કલ્યાણ થ ઓ, એવું કહેવાથી રાજાએ પોતાને માટે જેવો જોઇએ તેવો ગુણવાન પુત્ર માગી લીધો.

यशस्विनं कीर्तिमन्तं तेजस्विनमरिन्दमम् ।
यस्य मूत्रं पुरीषं च क्लेदः स्वेदश्च काञ्चनम् ॥ २ ॥

पदानि-यशस्विनं । कीर्तिमन्तं । तेजस्विनं । अरिन्दमं । यस्य । मूत्रं । पुरीषं । च । क्लेदः । स्वेदः । च । काञ्चनम् ॥

अन्वय-यशस्विनं कीर्तिमन्तं तेजस्विनं अरिन्दमम् । यस्य मूत्रं पुरीषं च क्लेदः स्वेदः च काञ्चनम् ॥

*

અર્થ- ( તેણે એવો પુત્ર માંગ્યો કે જે ) યશસ્વી, કીર્તિવાળો, તેજસ્વી અને ( अरि-दमं ) શત્રુને જીતવાવાળો, અને ( यस्य ) જેના ( मूत्रं ) મૂત્ર અને ( पुरीषं ) વિષ્ઠા તથા જેનો (क्लेदः) મળ અને ( स्वेदः ) પરસેવો એ બધું ( कांचनं ) સોનું જ હોય.

ભાવાર્થ-- તેણે એવો પુત્ર માંગ્યો કે જેના મળ, મૂત્ર, વિષ્ઠા અને પરસેવો અર્થાત્-જેના શરીરનો બધો મળ સુવર્ણ જ બને તથા જે યશસ્વી, કીર્તિમાન અને શત્રુને જીતવાવાળો થાય.

## સંધિ કરેલાં વાક્યો

१ यथा जनकः कुमारं पश्यति, तथा कुमारो जनकं पश्यति किम्? इदानीं कुमारो जनकं पश्यति। पश्य तम् स तं कथं पश्यति।

२ यथा त्वं धावसि, तथाऽहमपि धावामि। यथा स धावति तथा त्वं न धावसि। तथाऽहं धावामि, तथा त्वं धावसि।



અંક ૩

ૐ

# સંસ્કૃત-સ્વયં શિક્ષક

[ સંસ્કૃત-ભાષાનો અભ્યાસ કરવાનો સહેલો ઉપાય ]

ભાગ ત્રીજો

—:o:—


લેખક

પં૦ શ્રીપાદ દામોદર સાતવળેકર

અધ્યક્ષ— સ્વાધ્યાય-મંડળ,
કીલ્લા-પારડી. (જી. સુરત)


—:o:—


સંવત્ ૨૦૦૬, શકે ૧૮૭૨, સન ૧૯૫૦


—:o:—

# ધ્યાન આપો

આ પુસ્તકમાં પદચ્છેદ પૂર્વક સંસ્કૃતના પાઠ પહેલાં આપ્યા છે, અને પછી તેમનુજ સંધિ સાથે સંસ્કૃત આપવામાં આવ્યુ છે.

વાચક જો બન્નેની તુલના કરી અધ્યયન કરશે, તો સરળતાથી બધી વિષયનુ જ્ઞાન મેળવી શકશે

આમાં જે સસ્કૃત વાક્યો આવ્યા છે, તે અનુકૂળતાએ વારંવાર વાચવાથી ઘણો લાભ થઇ શકે છે.

આમાં જે શ્લોક આપ્યા છે, તેમનુ પણ વારેઘડીએ મનન કરવાથી, સસ્કૃત ભાષાનુ જ્ઞાન પ્રાપ્ત કરવામાં સારી મદદ મળશે.




સ્વાધ્યાય-મંડળ
આનંદાશ્રમ
કીલ્લા-પારડી
(જી. સૂરત)

લેખક
પં. શ્રીપાદ દામોદર સાતવળેકર



મુદ્રક અને પ્રકાશક— વસંત શ્રીપાદ સાતવળેકર, બી. એ.
ભારત મુદ્રણાલય, સ્વાધ્યાય-મંડળ 'આનંદાશ્રમ,'
કીલ્લા-પારડી (જી સૂરત)

ॐ

# સંસ્કૃત-સ્વયં શિક્ષક

ભાગ ત્રીજો

## પાઠ ૧

हे अर्जुन ! त्वं स्वधर्मं अवेक्ष्य विकंपितुं न अर्हसि। हे पार्थ ! त्वं क्षत्रिय असि। तव क्षत्रियस्य धर्म एव युद्धं कर्तव्यम्। अतः त्वं स्वधर्मं क्षात्रधर्मं च अवेक्ष्य एव विकंपितुं न योग्य।

क्षत्रियस्य श्रेय धर्म्यात् युद्धात् अन्यत् किं अपि न वर्तते। यदा क्षत्रिय धर्म्यं युद्धं करोति तदा एव स श्रेय प्राप्नोति। यदि स एव क्षत्रिय युद्धात् पलायनं करिष्यति, तर्हि स श्रेय नैव प्राप्स्यति।

युद्धं स्वर्गस्य द्वारं एव अस्ति। य क्षत्रिय धर्म्यं युद्धं करोति, स तेन एव द्वारेण स्वर्गं गच्छति। यदि स युद्धे मृत भवति तर्हि स स्वर्गं गच्छति, यदि न मृत, विजय प्राप्त, तर्हि राज्यं प्राप्नोति।

अत क्षत्रिय ईदृश युद्धं सुखेन करोति। तेन स्वर्गं भूमि-

राज्यं वा प्राप्नोति । परंतु यः भीरुः पुरुषः युद्धं कर्तुं न समर्थः, सः न स्वर्गं प्राप्नोति । न अपि अत्र भूमिराज्यं प्राप्नोति ।

हे अर्जुन! यदि त्वं धर्म्यं युद्धं न करिष्यसि, तर्हि स्वधर्मं हित्वा, कीर्तिं च हित्वा पापं एव अवाप्स्यसि । यदा क्षत्रियः धर्म्यं अपि युद्धं न एव करोति, तदा सः पापयुक्तः भवति ।

प्रभविष्णुः क्षत्रियः सदा युद्धाय सिद्धः भवति । भो शिष्य! किं क्षत्रियः एव युद्धं करोति ? न अन्यः कः अपि युद्धं करोति ?

क्षत्रियः शस्त्रेण युद्धं करोति तथा ब्राह्मणः अपि शब्देन युद्धं करोति, तत् ब्राह्मणस्य युद्धं वाग्युद्धं इति उच्यते ।

वैश्यः अपि वाणिज्ययुद्धं करोति । शूद्रः अपि स्वकर्तव्येन युद्धं करोति एव । सर्वः अपि जनः एवं युद्धं करोति । युद्धेन विना जिवनं अपि न भवति । यः युद्धं न करोति तस्य अकीर्तिः भवति ।

संभावितस्य अकीर्तिः मरणात् अपि अतिरिच्यते ।

यदा क्षत्रियः भयात् रणात् उपरतः भवति, तदा तस्य सर्वत्र अकीर्तिः एव भवति ।

०—:०:०:०:—:०

## पाठ २

यः क्षत्रियः धर्मेण राज्य रक्षति, राज्यस्य रक्षणार्थं च धर्म्यं युद्ध करोति, स एव क्षत्रिय यशस्वी कीर्तियुक्त च भवति। न अन्यः। उदधेः जलं स्नानाय योग्यं भवति। उदधे जलस्य स्नानेन शरीरस्य आरोग्य भवति। तेन स्नानेन शरीरस्य रोगः अपि दूरं गच्छति।

एक रथ भूमिमार्गेण गच्छति स रथः इति उच्यते। अन्य रथः जलमार्गेण गच्छति स जलरथः इति उच्यते। तृतीयः रथ आकाशमार्गेण गच्छति स विमान इति उच्यते। भूपति प्रजापालनेन यश इच्छति। ब्राह्मणः ज्ञानवर्धनेन श्रेयः वाञ्छति। वैश्यः धनवर्धनेन ऐश्वर्यं कांक्षति। शूद्रः कर्मणा उत्कर्षं प्राप्नोति। सर्वः अपि जन स्वकर्मणा एव यशस्वी भवति। न तु उद्योगं त्यक्त्वा सिद्धि क अपि प्राप्नोति। ईश्वर हृदयदेशे तिष्ठति। तं यदि त्वं शरणं गच्छसि तर्हि स एव त्वां स्वर्ग नेष्यति।

यथा दिवसे भानोः प्रकाश भवति तथा रात्रौ सोमस्य प्रकाश भवति। सूर्यस्य उष्ण प्रकाश तथा सोमस्य शीत प्रकाश अस्ति।

स्वस्य धर्म स्वधर्म। स्वस्य यः धर्म अस्ति स एव तस्य स्वधर्म भवति। ज्ञानार्जनं ब्राह्मणस्य स्वधर्म। प्रजापालन क्षत्रियस्य स्वधर्म। वाणिज्यं गोपालन च वैश्यस्य स्वधर्मः।

शूद्रस्य अपि सेवाकर्म एव स्वधर्मः अस्ति । यः स्वधर्मं पालयति सः एव उत्कर्षं प्राप्नोति न अन्यः । तस्य एव सर्वत्र कीर्तिः भवति न अन्यस्य । सः एव उत्तमं यशः प्राप्नोति न अन्यः ।

### સંધિ કરેલાં વાક્યો

हे अर्जुन ! त्वं स्वधर्ममवेक्ष्य विकंपितुं नार्हसि । हे पार्थ ! त्वं क्षत्रियोऽसि । तव क्षत्रियस्य धर्म एव युद्धं कर्तव्यम् । अतस्त्वं स्वधर्मं क्षात्रधर्मं चावेक्ष्यैवं कंपितुं न योग्यः ।

क्षत्रियस्य श्रेयो धर्म्याद्युद्धादन्यत्किमपि न वर्तते । यदा क्षत्रियो धर्म्यं युद्धं करोति तदैव स श्रेयः प्राप्नोति । यदि स एव क्षत्रियो युद्धात्पलायनं करिष्यति तर्हि स श्रेयो नैव प्राप्स्यति ।

युद्धं स्वर्गस्य द्वारमेवास्ति । यः क्षत्रियो धर्म्यं युद्धं करोति स तेनैव द्वारेण स्वर्गं गच्छति । यदि स युद्धे मृतो भवति तर्हि स स्वर्गं गच्छति, यदि न मृतो, विजयं प्राप्तस्तर्हि राज्यं प्राप्नोति ।

यः स्वधर्मं पालयति स एव उत्कर्षं प्राप्नोति नान्यः । पालयति यः स्वधर्मं, प्राप्नोत्युत्कर्षं स एव, नान्यः । अन्यो नोत्कर्षं प्राप्नोति, यः स्वधर्मं न पालयति ।

—::o::—

## પાઠ ૩

આ પાઠમા નીચેના શ્લોક વાચો—

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन ।
स यत्प्रमाण कुरुते लोकस्तदनुवर्तते ॥
( भ० गीता ३।२१ )

पदानि— यत् । यत् । आचरति । श्रेष्ठ । तत् । तत् । एव । इतर । जन । सः । यत् । प्रमाण । कुरुते । लोक । तत् । अनुवर्तते ॥

अन्वय— श्रेष्ठ यत् यत् आचरति, तत् तत् इतर जन स यत् प्रमाण कुरुते, लोक तत् अनुवर्तते ॥

અર્થ– શ્રેષ્ઠ માણસ જેમ જેમ આચરણ કરે છે, તેમ તેમ બીજા માણસો કરે છે તે જે જે પ્રમાણે ( कुरुते ) કરે છે અથવા માને છે, તેમજ લોકો તેમનુ અનુસરણ કરે છે

उद्धरेदात्मनात्मान नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बधुरात्मैव रिपुरात्मन ।
( भ० गीता ६।५ )

पदानि— उद्धरेत् । आत्मना । आत्मान । न । आत्मानं । अवसादयेत् । आत्मा । एव । हि । आत्मन । बधु । आत्मा । एव । रिपु । आत्मन ॥

अन्वय— आत्मना आत्मान उद्धरेत् । आत्मान न अवसा

दयेत्। आत्मा एव हि आत्मनः बंधुः आत्मा एव आत्मनः रिपुः॥

અર્થ—( आत्मना ) આપ ( आत्मानं ) પોતાનો ઉદ્ધાર કરો, પોતાને ન ગિરાવો, કારણકે માણસ સ્વયંજ પોતાનો બંધુ અને સ્વયંજ ( रिपुः ) શત્રુ છે.

असंशयं महाबाहो मनो दुर्निग्रहं चलम्।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते॥
(भ० गीता ६।५)

पदानि—अ+संशयं। महा+बाहो। मन.। दुर्निग्रहं। चलम्। अभ्यासेन। तु। कौन्तेय। वैराग्येण। च। गृह्यते॥

अन्वय.—हे महाबाहो! मन. असंशयं दुर्निग्रहं चलम्। हे कौन्तेय? अभ्यासेन वैराग्येण च गृह्यते॥

અર્થ–હે ( महाबाहो ) મોટી બાહુવાળા વીર! મન નિ:સંદેહ ( दुर्निग्रहं ) નિગ્રહ કરવા માટે કઠિન અને (चलं) ચંચળ છે. હે ( कौन्तेय ) કુન્તીના પુત્ર! તેનો ( अभ्यासेन ) પ્રયત્ન અને વૈરાગ્યથી ( गृह्यते ) નિગ્રહ કરવામાં આવે છે.

कालोऽसि लोकक्षयकृत्प्रवृद्धो
लोकान्समाहर्तुमिह प्रवृत्त.।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे
येऽवस्थिता. प्रत्यनीकेषु वीराः॥
(भ० गीता ११।३२)

पदानि—काल। असि। लोक+क्षय+कृत्। प्र+वृद्धः।

लोकान् । सं-आहर्तुं । इह । प्रवृत्तः । ऋते । अपि । त्वां न । भविष्यन्ति । सर्वे । ये । अवस्थिताः । प्रत्यनीकेषु । वीराः ॥

अन्वयः— लोकक्षयकृत् प्रवृद्धः कालः अस्मि । इह लोकान् समाहर्तुं प्रवृत्तः । त्वां ऋते अपि सर्वे न भविष्यन्ति । ये वीराः प्रत्यनीकेषु अवस्थिताः ॥

અર્થ—હું લોકોનો નાશ કરનાર કાલ ( प्रवृत्तः ) તથા સમૃદ્ધ ( अस्मि ) છું. ( इह ) અહિં લોકોનો ( समाहर्तुं ) સંહાર કરવા માટે પ્રવૃત્ત થયો છું. ( त्वां ऋते ) તારા વગર પણ આ બધા નહીં રહે, ( એ ) જે વીર ( प्रत्यनीकेषु ) શત્રુઓની સેનાઓમાં (अवस्थिताः )ઉભા રહેલાં છે.

तस्मात्त्वमुत्तिष्ठ यशो लभस्व
जित्वा शत्रून्भुंक्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव
निमित्तमात्रं भव सव्यसाचिन् ॥ ३३ ॥

पदानि— तस्मात् । त्वं । उत्तिष्ठ । यशः । लभस्व । जित्वा । शत्रून् । भुंक्ष्व । राज्यं । समृद्धं । मया । एव । एते । निहताः । पूर्वं । एव । निमित्त-मात्रं । भव । सव्य-साचिन् ॥

अन्वयः— हे सव्यसाचिन् ! तस्मात् त्वं उत्तिष्ठ, यशः लभस्व, शत्रून् जित्वा समृद्धं राज्यं भुंक्ष्व । एते मया पूर्वं एव निहताः । त्वं निमित्तमात्रं भव ॥

અર્થ—હે ( सव्यसाचिन् ) અર્જુન ! એટલા માટે તું ઉઠ,

યશ ( लभस्व ) લાભ કર, શત્રુઓ ઉપર વિજય મેળવી સમૃદ્ધ રાજ્યનો ( भुंक्ष्व ) ઉપભોગ કર. ( एते ) એમને તો મેં પૂહેલાંજ મારી નાખ્યાં છે. તૂ નિમિત્ત માત્ર ( भव ) બન.

આ પાઠમાં જે શ્લોક આપ્યા છે તેમનો અભ્યાસ કર્યા પછી પ્રત્યેક શ્લોકના પદ, અન્વય અને અર્થ મનથી કરો, અને જે અશુદ્ધિઓ માલમ પડે તેમને ઠીક કરો. કાગળ ઉપર લખવાની કોઈ આવશ્યકતા નથી. શ્લોક જોઈને આ કામ મનમાં પણ થઇ શકે છે, અને જે અભ્યાસ આ પ્રમાણે થશે એ વિશેષ ઉપયોગી રહેશે. જો આપ એવી રીતે અભ્યાસ કરશો તો સરળતાથી સંસ્કૃતનું જ્ઞાન આપને જલ્દીજ થઇ રહેશે

## સંધિ કરેલાં વાક્યો

अतः क्षत्रियः ईदृशं युद्धं सुखेन करोति । तेन स्वर्गं भूमिराज्यं वा प्राप्नोति । परंतु यो भीरुः पुरुषो युद्धं कर्तुं न समर्थः सः न स्वर्गं प्राप्नोति । नाप्यत्र भूमिराज्यं प्राप्नोति ।

हे अर्जुन ! यदि त्वं धर्म्यं युद्धं न करिष्यसि, तर्हि स्वधर्मं हित्वा, कीर्तिं च हित्वा पापमेवावाप्स्यसि । यदा क्षत्रियो धर्म्यमपि युद्धं नैव करोति, तदा स पापयुक्तो भवति ।

प्रभविष्णुः क्षत्रियः सदा युद्धाय सिद्धो भवति । भो शिष्य ! किं क्षत्रिय एव युद्धं करोति ?

+—o—+

## पाठ ४

श्रेष्ठः उत्तमः मनुष्यः यत् यत् आचरति तत् तत् एव इतरः जनः आचरति। यत् यत् एव नृपः आचरति तत् तत् एव प्रजाजनः आचरति। विद्वान् आचरति तथा एव साधारण जनः आचरति। यथा त्वं आचरसि तथा एव अहं आचरामि। यथा अहं आचरामि तथा त्वं न आचरसि।

सः श्रेष्ठः उत्तमः पुरुषः यत् यत् प्रमाणं कुरुते तत् तत् एव लोकः अनुवर्तते। यत् यत् भूपतिः प्रमाणं कुरुते तत् तत् एव प्रजाजनः अनुवर्तते। विद्वान् यत् यत् प्रमाणं कुरुते साधारणः जनः तत् तत् एव अनुवर्तते।

आत्मना आत्मानं उद्धरेत् सदा आत्मानं एव आत्मना उद्धरेत् कदा अपि आत्मना आत्मानं न अवसादयेत्। मनुष्येन सदा तथा प्रयत्नः कर्तव्य, येन तस्य उद्धारः भविष्यति।

आत्मा एव आत्मन· बंधुः भवति, तथा आत्मन· शत्रुः अपि आत्मा एव भवति। यः स्वकर्तव्यं करोति सः एव आत्मनः बंधुः तथा यः स्वकर्तव्यं न करोति स एव आत्मनः शत्रुः भवति।

हे मनुष्य! मनः दुर्निग्रहं चलं च अस्ति इति असंशयं सत्यं एव अस्ति। परंतु तस्य निग्रह अभ्यासेन वैराग्येण च भवति न अन्येन केन अपि कर्मणा भवति।

अहं लोकस्य क्षयकृत् काल अस्मि। लोकान् समाहर्तुं इह अस्मिन् युद्धे प्रवृत्त अस्मि। युद्धे सर्वस्य लोकस्य

क्षयं कर्तुं इच्छामि। ये वीराः अस्मिन् युद्धे अत्र अवस्थिताः ते सर्वे त्वां ऋते अपि न भविष्यन्ति एव।

यः वीरः इदानीं युद्धे अवस्थितः स विजयं प्राप्स्यति। यः धीरः पुरुषः युद्धं करोति सः अवश्यं विजयं प्राप्नोति।

तस्मात् त्वं उत्तिष्ठ। हे वीर! इदानीं त्वं युद्धाय उत्तिष्ठ, यशः च लभस्व। शत्रून् जित्वा समृद्धं राज्यं भुंक्ष्व।

एते वीरा मया एव पूर्वं निहताः। अतः त्वं निमित्तमात्रं भव।

क्षत्रस्य धर्मस्य तत्त्वं धर्म्यं युद्धं कर्तव्यं इति एव अस्ति। अतः धर्म्यात् युद्धात् पलायनं क्षत्रियाय न योग्यं भवति!

तस्य क्षत्रियस्य किं नगरं अस्ति? सः वीरः क्षत्रियः वीरपुरे नगरे निवसति। तस्मात् नगरात् स इदानीं एव अत्र आगत। सः किमर्थं अत्र आगत? स कदा अस्मात् नगरात् स्वनगरं गमिष्यति इति त्वं जानासि किम्?

आदौ वीरेण इंद्रियाणि संयम्य शत्रुणा सह अवश्यं युद्धं कर्तव्यम्। यः वीरः निर्मलः निश्चलः निर्विकारः नित्यपूतः निस्पृहः निर्मोहः सः एव प्रशंसनीयः। स एव युद्धे विजय प्राप्नोति।

**સૂચના**—જો પાઠક આ વાકય સરળતાથી સમજી શકે તો ઠીક જ છે પણ જો એ વાકય સમજમા ન આવે, તો તેમને અગાઉના ભાગમાં અર્થાત્ બીજા ભાગમા ફરીવાર જુએ.

વાચક ને પોતાને જ અનુભવ થતો હશે કે આ પદ્ધતિથી નિયમપૂર્વક અધ્યયન કરવાથી કેટલી ઉન્નતિ શક્ય છે. થોડા

પરિશ્રમ માત્રથી સંસ્કૃતનું, કેટલુ વિસ્તૃત જ્ઞાન થાય છે. હવે વાચક પોતે ઘણાખરા વાકય, બોલી શકે છે, લખી શકે છે, અને સરળ શ્લોકના અર્થ પણ સમજી શકે છે.

વાચકોએ એક વસ્તુ ધ્યાનમાં રાખવી જોઈએ, અને કોઈપણ તે એ કે પાઠ સારી રીતે સમજ્યા વગર આગળ વધવાનો પ્રયત્ન ન કરવો. વધુ સમય લાગે તો ચિંતા નહીં; પણ પહેલા પાઠના પાકા જ્ઞાન પછીજ આગળ વધવાનો પ્રયત્ન કરવો જોઈએ.

संस्कृत-वाचन-पाठः

सः देवर्षिः नारदः एवं उक्त्वा विरराम। राजश्रेष्ठः युधिष्ठिरः तु शोकपारिप्लुतः चिन्तया मोहितः अभूत्।

दीनमनसं शोकोपहतं तं आतुरं वीरं युधिष्ठिरं नागं इव निःश्वसन्तं, अश्रुपूर्णनयनं कुन्ती माता इदं वचनं अब्रवीत्।

शोकपरीताङ्गी दुःखोपहतचेतना कुन्ती सुमधुरया वाचा इदं अर्थवत् वचनं तं अब्रवीत्।

हे महाराज युधिष्ठिर! त्वं एवं शोचितुं न अर्हसि। हे महाप्राज्ञ! शोकं जहि। मम इदं वचनं शृणु।

सः कर्णः मया पूर्वं तव बन्धुभावं ज्ञापयितुं याचितः। पित्रा देवेन सूर्येण च अपि पूर्वं तथैव प्रार्थितः।

हितकामेन सुहृदा दिवाकरेण यत् वाच्यं तत्सर्वं उक्तं, मम अग्रतः स्वप्नान्ते च। सूर्यः पुरा स्नेहकारणेन एनं कर्णं ज्ञापयितुं, त्वया सह एकतां कर्तुं च न अशक्नोत्। नापि अहं अशकम् त्वया सह तस्य स्नेहभावं संवर्धयितुम्।

—o-:o:—

## પાઠ ૫

दुष्यन्तस्तु ततो राजा पुत्रं शाकुंतलं तदा ।
भरतं नामतः कृत्वा यौवराज्येऽभ्यषेचयत् ॥
(म० भा० आदि: ७४।१२९)

अन्वयः—ततः दुष्यन्तः राजा तु तदा शाकुंतलं पुत्रं नामतः भरतं कृत्वा यौवराज्ये अभ्यषेचयत् ॥

અર્થ—પછી દુષ્યંત રાજાએ શકુન્તલાના પુત્રનું નામ ભરત પાડી યૌવરાજ્યમાં અભિષેક કર્યો.

तस्य तत्प्रथितं चक्रं प्रावर्तत महात्मनः ।
भास्वरं दिव्यमजितं लोकसंनादनं महत् ॥ १३० ॥

अन्वयः— तस्य महात्मनः महत् लोकसंनादनं अजितं दिव्यं भास्वरं प्रथितं चक्रं प्रावर्तत ॥

અર્થ—તે મહાત્માનું મોટા લોકોમાં પ્રખ્યાત અજેય દિવ્ય તેજસ્વી ચક્ર પ્રવર્તિત થયું.

स विजित्य महीपालांश्चकार वशवर्तिनः ।
चचार च सतां धर्मं प्राप चानुत्तमं यशः ॥ १३१ ॥

अन्वयः- स महीपालान् विजित्य, वशवर्तिनः चकार । सतां धर्मं च चकार । अनुत्तमं यशः च प्राप ॥

અર્થ—તેણે મહીપાલોને જીતીને વશમાં કરી લીધા. સજ્જનોના ધર્મનું આચરણ કર્યું, અને (अनुत्तमं) અત્યંત ઉત્તમ યશ (प्राप) પ્રાપ્ત કર્યું.

स राजा चक्रवर्त्यासीत्सार्वभौमः प्रतापवान् ।
ईजे च बहुभिर्यज्ञैर्यथा शक्रो मरुत्पतिः ॥ १३२ ॥

पदानि— सः । राजा । चक्रवर्ती । आसीत् । सार्वभौमः । प्रतापवान् । ईजे । च । बहुभिः । यज्ञैः । यथा । शक्रः । मरुत्-पतिः ॥

अन्वयः— सः राजा प्रतापवान् सार्वभौमः चक्रवर्ती आसीत् । यथा मरुत्पतिः शक्रः [ तथा सः ] बहुभिः यज्ञैः ईजे ॥

અર્થ–તે રાજા પ્રતાપી સાર્વભૌમી અને ચક્રવર્તી હતો. મરૂતો-ના રાજા (शक्र) ઇન્દ્રની જેમ ઘણા યજ્ઞોથી (ईजे) યજ્ઞ કરતો રહ્યો.

याजयामास तं कण्वो विधिवद्भूरिदक्षिणम् ।
श्रीमान्गोविततं नाम वाजिमेधमवाप स ॥ १३३ ॥

अन्वयः— तं कण्व विधिवत् याजयामास । भूरि-दक्षिणं गोविततं नाम वाजिमेधं सः श्रीमान् अवाप ॥

અર્થ–તેમનાથી—કણ્વે વિધિપૂર્વક યજ્ઞ કરાવ્યો. ઘણી દક્ષિણાવાળા ગોવિતત નામના અશ્વમેધને તે શ્રીમાનને (अवाप) પ્રાપ્ત કર્યો અર્થાત્ યજ્ઞ કર્યો.

यस्मिन्सहस्रं पद्मानां कण्वाय भरतो ददौ ।
भरताद्भारती कीर्तिर्येनेदं भारतं कुलम् ॥ १३४ ॥

अन्वयः— यस्मिन् भरत पद्मानां सहस्रं कण्वाय ददौ । भरतात् भारती कीर्तिं, येन इदं भारतं कुलम् ॥

અર્થ-જેમાં ભરતે સંહસ પદ્મ કણ્વને દાન આપ્યા. ભરતથી ભારતની કીર્તિ થઇ, જેનાથી આ ભારત કુળ ઉત્પન્ન થયું.

अपरे ये च पूर्वे वै भारता इति विश्रुता ।
भरतस्यान्ववाये हि देवकल्पा महौजसः ॥ १३५ ॥

अन्वयः—भरतस्य अन्ववाये हि महोजस देवकल्पाः अपरे ये च पूर्वे वै भारताः इति विश्रुता ॥

અર્થ-ભરતના (अन्ववाये) ગોત્રમાં જ મહાતેજસ્વી દેવોના સમાન પહેલાં એ પૂર્વના બધા 'ભારત' (इति) આ નામથી (विश्रुता.) પ્રસિદ્ધ થયા છે.

बभुवुर्ब्रह्मकल्पाश्च बहवो राजसत्तमाः ।
येषामपरिमेयानि नामधेयानि सर्वशः ॥ १३६ ॥

अन्वयः— बहव राजसत्तमाः ब्रह्मकल्पाः बभूवुः येषां सर्वशः नामधेयानि अपरिमेयानि ॥

અર્થ-ઘણા રાજશ્રેષ્ઠ પુરૂષ (ब्रह्मकल्पा.) બ્રાહ્મણ જેવા (बभूवुः) થયાં જેમના સહુના નામ અપરિમિત છે.

ततः स नृपशार्दूल पूरुं राज्येऽभिषिच्य च ।
तपः सुचरितं कृत्वा भृगुतुंगे महातपाः ॥ ७७ ॥

अन्वय — हे नृपशार्दूल ! तत पूरुं राज्ये अभिषिच्य सः महातपाः भृगुतुंगे सुचरितं तपः कृत्वा ॥

અર્થ-હે નૃપ શ્રેષ્ઠ ! પછી પુરૂને રાજ્યપર અભિષેક કરી તે મહા-તપસ્વીને ભૃગુતુંગ પર્વતપર ઉત્તમ તપ કરીને.

कालेन महता पश्चात्कालधर्ममुपेयिवान् ।
कारयित्वा त्वनशनं सदार स्वर्गमाप्तवान् ॥ ५० ॥

अन्वय.— पश्चात् महता कालेन कालधर्मं उपेयिवान् । स-दार: तु अनशनं कारयित्वा स्वर्गं आप्तवान् ॥

अर्थ–પછી લાંબા સમય બાદ (कालधर्म) મૃત્યુને (उपेयिवान्) પ્રાપ્ત થયો. (स-दार:) સ્ત્રીસાથે (अनशनं) ઉપવાસનુ વ્રત ધારણ કરીને સ્વર્ગને (आप्तवान्) પ્રાપ્ત થયો

પાઠ સમાપ્ત થયા પછી પાઠક શ્લોક વારંવાર વાચે એ યાદ રાખવુ જોઇએ કે વારે ઘડી શ્લોકનું મનન કરવાથીજ સસ્કૃતમા પ્રવેશ થઇ શકશે. તેથી આ સબધમા સાવધાન રહેવુ જોઇએ

## સંધિ કરેલાં વાકયો

श्रेष्ठ उत्तमो मनुष्यो यद्यदाचरति, तत्तदेवेतरो जन आचरति। यद्यन्नृप आचरति, तत्तदेव प्रजाजन आचरति। यथा विद्वानाचरति, तथैव साधारणो जन आचरति । यथा त्वमाचरसि, तथा एवाहमाचरामि । यथाऽहमाचरामि, तथा त्वं नाचरसि !

— ० —

## પાઠ ૬

પહેલાની જેમ આ પાઠમા આગળના પાઠના સંસ્કૃતવાક્યોની સધિ બનાવી સરળ સસ્કૃત લખવામા આવે છે. પાઠક એનો અભ્યાસ પહેલાની જેમજ કરે.

सस्कृत-वाचन पाठ ।

राम रजोमेघेन सा ताटिका राक्षसी मुहूर्तं व्यमोहयत् । परतु पश्चात्ता ताटिका राम शरेणोरसि विव्याध । तेन सा पपात ममार च ।

ततस्ताटिकावधेन तुष्टो मुनिवरो विश्वामित्रो राममुवाच । हे राजपुत्र ! सर्वथा परितुष्टोऽस्मि तेऽनेन शौर्येण । अतस्ते सर्वाण्यप्यस्त्राणि प्रीत्या प्रयच्छामि ।

तैरस्त्रै समन्वितो युद्धे शत्रूञ्जेष्यसि इत्युक्त्वा स विप्रो रामाय तानि सर्वाण्येवास्त्राणि न्यवेदयत् ।

तत स विश्वामित्रो राम लक्ष्मण च गृहीत्वा स्वकीय सिद्धाश्रमं प्राविशत् ।

तत्र मुहूर्तं विश्रान्तौ रामलक्ष्मणौ मुनिश्रेष्ठो यज्ञदीक्षा प्रविशत्विति तमनुयन्यतु । तच्छ्रुत्वा सर्वेऽपि मुनयो राम-लक्ष्मणौ प्रशशसु ।

अद्यप्रभृति षड्रात्र रक्षता युवामिति चोचु । तावपि यत्तौ षड्होरात्रं तपोवनमरक्षताम् ।

पष्ठ्या रात्रौ माया कुर्वाणौ राक्षसावभ्यधावताम् परमक्रुद्धो रामो मारीचस्य राक्षसस्योरसि मानवमस्त्रं चिक्षेप।

तेनास्त्रेण मारीच सागरे क्षिप्त । मारीचं सागरे क्षिप्तं दृष्ट्वा सुबाहोरुरस्याग्नेयमस्त्रं चिक्षेप।

सोऽपि सुबाहुरस्त्रेण विद्धो भुवि प्रापतत् । रामोऽपि वायव्यास्त्रेण शेषान् राक्षसाञ्जघान।

एव निर्विघ्नतया समाप्तयज्ञे विश्वामित्रो दिशो राक्षसहीना दृष्ट्वा राममब्रवीत् ।

कृतार्थोऽस्मि महाबाहो !

मिथिलोपवने तु तत्र निर्जनमाश्रमपद दृष्ट्वा राघव पप्रच्छ, कस्यायमाश्रम ?

विश्वामित्र उवाच–अत्र पुराऽहल्यासहितो गौतमस्तप आतिष्ठत् । एष गौतमस्य महर्षे रस्य आश्रम इति॥

પાઠક એનો અભ્યાસ કરે કોઇ મુશ્કેલી નડે તો ભાગ બીજાના પાઠ ૪૬ ના વાક્ય જોઈ તેનુ નિવારણ કરે

o — ooo — o

# પાઠ ૭

હવે આગલા પાઠના શ્લોકનુ સરળ સંસ્કૃત નીચે આપવામા આવ્યું છે, એનો અભ્યાસ સારી રીતે કરો—

ततो दुष्यन्तो राजा तु तदा शाकुन्तलं पुत्रं नामतो भरतं कृत्वा यौवराज्येऽभ्यषेचयत्।

तस्य महात्मनो महल्लोकसंनादनमर्जितं दिव्यं भास्वरं प्रथितं चक्रं प्रावर्तत। स महीपालान्विजित्य वशवर्तिनश्चकार। सतां धर्मं च चचार। अनुत्तमं यशश्च प्राप। स राजा प्रतापवान्सार्वभौमश्चक्रवर्ती आसीत्। यथा मरुत्पतिः शक्रस्तथा स बहुभिर्यज्ञैश्चेजे।

तं कण्वो विधिवद्याजयामास। भूरिदक्षिणं गोवितर्तं नाम वाजिमेधं स श्रीमानवाप। यस्मिन्भरतः पद्मानां सहस्रं कण्वाय ददौ। भरताद्भारती कीर्तिर्येनेदं भारतं कुलम्।

भरतस्यान्ववाये हि महौजसो देवकल्पा अपरे ये च पूर्वे वै भारता इति विश्रुता। बहवो राजसत्तमा ब्रह्मकल्पा बभूवुः। येषां सर्वशो नामधेयानि अपरिमेयानि।

हे नृपशार्दूल ! तत पूरुं राज्येऽभिषिच्य स महातपाः भृगुतुंगे सुचरितं तपः कृत्वा, पश्चान्महताकालेन कालधर्ममुपेयिवान्।

सदारस्त्वनशनं कारयित्वा स्वर्गमाप्तवान्।

प्रश्नाः ।

१ ताटिका रामं कथं व्यमोहयत् ?
२ पश्चाद्रामेण किं कृतम् ?
३ ताटिकावधेन कः तुष्ट ।
४ तुष्टेन विश्वामित्रेण रामाय किं दत्तम् ?
५ सिद्धाश्रम गत्वा रामेण किं कृतम् ?
६ रामेण केन अस्त्रेण मारीचः हत· ?
७ राम शेषान् राक्षसान् केन अस्त्रेण जघान ?
८ पश्चात् कस्या आश्रम राम गत ?

પાઠક આ પ્રશ્નોના ઉત્તર સ સ્કૃતમાજ આપવાનો પ્રયત્ન કરે. જો આગળનો પાઠ ઠીક રીતે સમજાઈ ગયો હશે, તો ઉત્તર સરળતાથી આપી શકાશે આથી વાચકોની પરીક્ષા પણ થઈ જશે

## સંધિ કરેલાં વાકયો

एते वीरा मयैव पूर्वं निहता । अतस्त्वं निमित्तमात्रं भव क्षत्रस्य धर्मस्य तत्त्वं धर्म्यं युद्धं कर्तव्यमित्येवास्ति। अतो युद्धात्पलायन क्षत्रियाय न योग्य भवति । तस्य क्षत्रियस्य किं नगरमस्ति ? स वीर क्षत्रियो वीरपुरे निवसति । तस्मान्नगरात्स इदानीमेवागत· । स किमर्थमनागत ?

—०- ० -०—

# પાઠ ૮

## संस्कृत-वाक्यानि ।

१ अत्र पुरा अहल्यासहितः महात्मा गौतमः ऋपि तपः अतप्यत् । २ मुनिवेषधरः इन्द्रः गौतमस्य आश्रमं एकदा आजगाम । ३ तव संगं इच्छामि इति स अहल्यां अब्रवीत् । ४ तस्मिन्काले गौतमः महामुनिः स्वकीयं आश्रमं प्रविवेश । ५ तदा इन्द्रः विपण्णवदन च अभवत् । ६ त तथा दृष्ट्वा मुनि इन्द्रं शशाप । ७ भार्यां अपि ततो गौतमः शप्तवान् । ८ यदा रामः एतद्वन आगमिष्यति तदा पूता भविष्यसि । ९ हे राम ! इमं आश्रमं देवरूपिणीं अहल्यां च अधुना तारय ।

## ભાષા-વાક્ય

(૧) અહીંયા પહેલાના વખતમા અહલ્યા સાથે મહાત્મા ગૌતમ ઋષિ તપ કરતા હતા. (૨) મુનિવેશ ધારણ કરી ઇન્દ્ર ગૌતમના આશ્રમમા એક વખતે આવ્યા (૩) તારા સંગની હું ઇચ્છા ધરાવુ છુ, એમ તેમણે અહલ્યાને કહ્યુ. (૪) તેજ વખતે ગૌતમ મહામુનિએ આશ્રમમાં પ્રવેશ કર્યો. (૫) ત્યારે ઇન્દ્ર ખિન્ન વદન થયા. (૬) તેને તેવો જોઇ મુનિએ ઇન્દ્રને શાપ આપ્યો (૭) સ્ત્રીને પણ પછી ગૌતમે શાપ આપ્યો. (૮) જ્યારે રામ આ વનમા આવશે, ત્યારે તુ પવિત્ર થઇશ (૯) હે રામ ! આ આશ્રમ તથા દેવરૂપિણી અહલ્યાનો હવે ઉદ્ધાર કરો.

## संस्कृत-वाक्यानि ।

१०इति एवं विश्वामित्रस्य ऋषेः वचन श्रुत्वा सलक्ष्मण राम आश्रमं प्रविवेश । ११तत्र तपस्विनीं दीप्ता अहल्या राम ददर्श । १२ रामस्य दर्शनेन सा अहल्या पूता भूत्वा पूर्ववत् रूपसपन्ना बभूव । १३ रामस्य दर्शनात् एव शापस्य अन्तं गता सा अहल्या । १४ गौतमवचन स्मरन्ती सा अहल्या रामलक्ष्मणयो पाद्य अर्घ्य आतिथ्य च चकार । १५ रामलक्ष्मणौ अपि तपोबल विशुद्धाया तस्या अहल्याया पादौ जगृहतु । १६ गौतम अपि तदा तत्र आगत्य, राम विधिवत् संपूज्य, पूर्ववत् तप तेपे । १७ तत रामः लक्ष्मणेन सह विश्वामित्रम् पुरस्कृत्य उत्तरा दिश प्रस्थित ।

### ભાષા-વાક્ય

(૧૦) એવુ આ વિશ્વામિત્ર ઋષિનુ વચન સાભળી લક્ષ્મણ સાથે રામે આશ્રમમા પ્રવેશ કર્યો (૧૧) ત્યા તપસ્વિની તેજસ્વી અહલ્યાને રામે જોઇ (૧૨) રામચદ્રના દર્શનથી તે અહલ્યા પવિત્ર થઇને પહેલાની જેમ સ્વરૂપવાન થઇ ગઇ (૧૩) રામના દર્શનમાત્રથી શાપ મુક્ત થઇ તે અહલ્યા (૧૪)ગૌતમ મુનિના વચનનુ સ્મરણ કરતી તે અહલ્યા રામ અને લક્ષ્મણના ( पाद्य ) પગ ધોવા માટે પાણી, (अर्घ्य) અને પૂજાસાહિત્ય લાવી, ( आतिथ्य ) અતિથિસત્કાર કરવા લાગી (૧૫) રામ લક્ષ્મણે પણ તપના બળથી શુદ્ધ થએલી તે અહલ્યાના પગે પડ્યા (૧૬) ગૌતમ પણ ત્યારે ત્યા આવી રામની વિધિપૂર્વક પૂજા કરી, તપ કરવા લાગ્યો (૧૭) ત્યારે રામ લક્ષ્મણ સાથે વિશ્વામિત્રને આગળ રાખી ઉત્તર દિશા તરફ ચાલ્યા

# પાઠ ૯

## सस्कृत वाक्यानि

१८ मिथिलापतिः राजा जनक तु तत् श्रुत्वा विनयेन सहसा प्रत्युज्जगाम। १९ तेन जनकेन दत्तं पूजार्घं प्रतिगृह्य विश्वामित्रः राज्ञः कुशलं यज्ञस्य च निर्विघ्नता पप्रच्छ। २० तत्सर्वं निवेद्य राजा अपि कृताञ्जलि मुनि पप्रच्छ कौ इमौ धीरो पुत्रौ इति। २१ विश्वामित्र अपि सर्वं पूर्वं वृत्तान्त न्यवेदयत्। २२ तत जनक उवाच। धन्य अनुगृहीत च अस्मि।

## ભાષા-વાક્ય

(૧૮) મિથિલાદેશના પાલક રાજા જનક તે સાભળી વિનયપૂર્વક તેજ ક્ષણે (प्रत्युज्जगाम) સન્મુખ ગયા (૧૯) તે જનકે આપેલા પૂજાસાહિત્યનો સ્વીકાર કરી વિશ્વામિત્રે રાજાના કુશળ સમાચાર અને યજ્ઞની નિર્વિઘ્નતા બાબત પૂછ્યુ (૨૦) આ બધુ નિવેદન કરી રાજા પણ (कृत अञ्जलि) હાથજોડી મુનિથી પુછવા લાગ્યો કે આ વીર પુત્ર કોણુ છે? (૨૧) વિશ્વામિત્રે પણ બધુ પૂર્વ-વૃત્તાત કહી સભળાવ્યુ (૨૨)ત્યારે જનક બોલ્યા કે હુ ધન્ય અને અનુગૃહીત છુ

વાચક આ વાક્ય વારવાર વાચી સારી રીતે તૈયાર કરે, અને એવી રીતે અભ્યાસ કરે કે કોઈ મુશ્કેલી ન રહે ધ્યાનપૂર્વક મનન કરી ઓછામા ઓછા વીસ વાર આ પાઠ વાચે

### સંધિ કરેલાં વાક્ય

तेन जनकेन दत्त पूजार्घं प्रतिगृह्य विश्वामित्रो राज्ञः कुशलं यज्ञस्य च निर्विघ्नतां पप्रच्छ। तत्सर्वं निवेद्य राजापि कृताञ्जलि-र्मुनिं पप्रच्छ, काविमौ वीरौ पुत्राविति। विश्वामित्रोऽपि सर्वं पूर्व वृत्तान्त न्यवेदयत्। ततो जनक उवाच-धन्योऽनुगृहीतश्चास्मि।

प्रश्नाः

१ ऋषिः गोतमः कुत्र तप अतप्यत् ?
२ मुनिवेषधर इन्द्रः कुत्र आजगाम ?
३ इन्द्र किमर्थ तत्र आगतः ?
४ तदा गौतमेन ऋषिणा किं कृतम् ?
५ गौतमं ऋषि दृष्ट्वा इन्द्रेण कि कृतम् ?
६ गौतम अहल्या किमर्थं शप्तवान् ?
७ अहल्या कदा पूता भविष्यति ?
८ विश्वामित्रेण कि उक्तम् ?
९ रामेन अहल्या कुत्र दृष्टा ?
१० रामस्य दर्शनेन किं जातम् ?
११ अहल्या रामस्य आतिथ्यं कथं अकरोत् ?
१२ रामः तत ऊर्ध्वं कुत्र प्रस्थित ?
१३ जनकेन कि कृतम् ?
१४ जनक मुनि किं पृष्टवान्
१५ विश्वामित्रः तस्मै किं न्यवेदयत् ?

—o+o—

## પાઠ ૧૦

( म० भारत आदि० १४९ )

विदुरस्य सुहृत्कश्चित्खनक कुशलो नर ।
विविक्ते पाण्डवान्राजन्निदं वचनमब्रवीत् ॥ १ ॥

अन्वय —हे राजन् ! कश्चित् नर विदुरस्य सुहृत् कुशल खनक विविक्ते पाण्डवान् इद वचन अब्रवीत् ॥

અર્થ—હે રાજા ! કોઈ એક વિદુરના (सुहृत्) મિત્રે કુશળ ( खनक ) સુરંગ ખોદનારાએ ( विविक्ते ) એકાન્તમા પાંડવોને આ વચન કહ્યા

प्रहितो विदुरेणास्मि खनक कुशलो ह्यहम् ।
पाण्डवाना प्रिय कार्यमिति किं करवाणि व ॥ २ ॥

अन्वय — अह कुशल खनक विदुरेण प्रहित अस्मि । व पाण्डवाना कि प्रिय कार्य करवाणि इति ।

અર્થ—હું કુશળ માટી ખોદનારો વિદુરથી મોકલાયેલો છુ ( व ) આપ પાંડવોનું શું પ્રિય કાર્ય કરૂ ?

प्रच्छन्न विदुरेणोक्त श्रेयस्त्वमिह पाण्डवान् ।
प्रतिपादय विश्वासादिति किं करवाणि व ॥ ३ ॥

अन्वय — विदुरेण विश्वासात् प्रच्छन्न उक्त इह त्व पाण्डवाना श्रेय प्रतिपादय इति । व कि करवाणि ?

અર્થ—વિદુરે વિશ્વાસ હોવ ને કારણે ( प्रच्छन्न ) ગુપ્ત રીતે કહ્યુ છે કે અહીંયા તુ પાંડવોનુ હિત (प्रतिपादय) કર તેથી આપનુ કયુ કામ ( करवाणि ) કરૂ?

कृष्णपक्षे चतुर्दश्या रात्रावस्या पुरोचन ।
भवनस्य तव द्वारि प्रदास्यति हुताशनम् ॥ ४ ॥

अन्वय — कृष्णपक्षे अस्या चतुर्दश्या रात्रौ पुरोचन तव भवनस्य द्वारि हुताशन प्रदास्यति ॥

**અર્થ**—કૃષ્ણપક્ષની આ ચૌદસની રાતે પુરોચન તારા ઘરના દ્વારમા ( हुताशन ) અગ્નિ આપશે અર્થાત્ ઘર બાળી મુકશે

माता सह प्रदग्धव्या पाडवा पुरुपर्पभा ।
इति व्यवस्थितं तस्य धार्तराष्टस्य दुर्मते ॥ ५ ॥

अन्वय — पुरुपर्पभा पाडवा माता सह प्रदग्धव्या । इति तस्य दुर्मते धार्तराष्टस्य व्यवस्थितम् ॥

**અર્થ**— ( पुरुप-ऋपभा ) પુરુષશ્રેષ્ઠ પાડવ ( माता ) માતા સાથે ( प्र दग्धया ) બાળી મુકવામા આવે, એમ એ દુષ્ટબુદ્ધિ ( धार्तराष्ट्रस्य ) ધૃતરાષ્ટ્રપુત્રે ( व्यवस्थितं ) નક્કી કરી રાખ્યુ છે

किञ्चिच विदुरेणोक्तो म्लेच्छवाचासि पाडव ।
त्वया च तत्तथेत्युक्तमेतद्विश्वासकारणम् ॥ ६ ॥

अन्वय —हे पाडव ! म्लेच्छवाचा विदुरेण किंचित् च उक्त असि । तत् त्वया च तथा इति उक्तं एतत् विश्वासकारणम् ।

**અર્થ**—હે પાડવ ! ( म्लेच्छवाचा ) મ્લેચ્છ ભાષામા વિદુરે તમને ( उक्त ) કહેલુ તે ( तथा ) ઠીક છે એમ તે પણ કહ્યુ ( एतत् ) આ વિશ્વાસનો હેતુ છે [અર્થાત્ એટલુ કહેવાથી તારો વિશ્વાસ મારા પર થાય ]

उवाच तं सत्यधृति कुंतीपुत्रो युधिष्ठिरः ।
अभिजानामि सौम्य त्वां सुहृदं विदुरस्य वै ॥ ७ ॥

अन्वयः— सत्यधृतिः कुंतीपुत्र युधिष्ठिरः तं उवाच । हे सौम्य ! त्वां विदुरस्य सुहृदं अभिजानामि ॥

અર્થ—( सत्यधृति ) ધૈર્યવાન કુંતીપુત્ર યુધિષ્ઠિરે તેને કહ્યું. હે ( सौम्य ) પ્રિય ! તને વિદુરનો મિત્ર સમજુ છું.

शुचिं प्राप्तं प्रियं चैव सदा च दृढभक्तिकम् ।
न विद्यते कवे किञ्चिदविज्ञातं प्रयोजनम् ॥ ८ ॥

अन्वय — शुचिं प्रियं सदा दृढभक्तिकं प्राप्तं [ त्वां अभिजानामि ] कवेः अविज्ञातं किंचित् प्रयोजन न विद्यते ॥

અર્થ—શુદ્ધ પ્રિય હંમેશા દ્રઢભક્તિ ધરાવનાર તું પ્રાપ્ત થયો છે, એમ હું સમજુ છું ( कवे ) કવિ વિદુરથી કોઇ કાર્ય અજ્ઞાત નથી. ( અર્થાત્ તમે જેમ કરશો તેમ તે સમત થશે )

આ પાઠના શ્લોકોમા આવેલી સધીઓનુ સ્પષ્ટીકરણ—

१ कुशलो नरः = कुशल नर ।
२ राजन्निदं = राजन् इदं ।
३ प्रहितो विदुरेणास्मि = प्रहितः विदुरेण अस्मि ।
४ कुशलो ह्यहं = कुशल हि अहम् ।
५ विदुरेणोक्त = विदुरेण उक्तः ।
६ श्रयस्त्वम् = श्रेय त्वम् ।
७ विश्वासादिति = विश्वासान् इति ।
८ किञ्चिच्च = किञ्चिन् च ।

९ तत्तथेत्युक्तमेतद्विश्वासकारण = तत् तथा इति उक्तं एतत् विश्वास-कारणम्।

વાચક આ સધીઓને આગળના શ્લોકમા જુએ, અને સમજી લે કે કેવી રીતે સધી કરેલી છે

### સધિ કરેલાં વાક્યો

अत्र पुराऽहल्यासहितो महात्मा गौतम ऋषिस्तपोऽतप्यत्। मुनिवेषधर इन्द्रो गौतमस्याश्रममेकदा जगाम। तत्र सगमिच्छामीति सोऽहल्यामब्रवीत्। तस्मिन्काले गौतमो महामुनिस्स्वकीय माश्रमं प्रविवेश, तदेन्द्रो विषण्णवदनश्चाभवत्। त तथा दृष्ट्वा मुनिरिन्द्रं शशाप। भार्यामपि तथा गौतम शप्तवान्। यदा राम एतद्वनमागमिष्यति तदा पूता भविष्यसि। हे राम! इममाश्रमं देवरूपिणीमहल्याश्चाधुना तारय।

### प्रश्ना

१ विदुरस्य क सुहृत् अत्र आगत ?
२ पाण्डवान् किं वचनं स अब्रवीत् ?
३ स खनक केन तत्र प्रहित ?
४ विदुरेण प्रच्छन्न किं उक्तम् ?
५ कृष्णपक्षे चतुर्दश्या रात्रौ किं भविष्यति ?
६ धार्तराष्ट्रस्य दुर्बुद्धे किं व्यवसितम्।
७ सत्यधृति युधिष्ठिर किं उवाच ?
८ य युधिष्ठिर कस्मै उवाच ? किं उवाच ?
९ विदुरस्य क सुहृत् अस्ति ?
१० किमर्थ अत्र आगत ?

=० ० ०=

# પાઠ ૧૧

જો આપે અગાઉના બે પાઠનું અધ્યયન બરાબર કર્યું હશે, તો નીચે લખેલા વાક્યો આપને સરળતાથી સમજાઇ જશે.

संस्कृत-वाचन-पाठ ।

पुराऽत्र महात्माऽहल्यासहितो गौतमऋषिस्तपोऽतप्यत्। इन्द्रो मुनिवेषधरो गौतमस्याऽश्रममेकदाऽऽजगाम । तव संगमिच्छामीति सोऽहल्यामब्रवीत्। गौतमो महामुनिः स तस्मिन्काले प्रविवेश स्वकीयमाश्रमम् ।

तदा॒ विषण्णवदनश्चाभवत् । तथा तं दृष्ट्वा मुनिरिन्द्रं शशाप। ततो गौतमो भार्यामपि शप्तवान् । यदा राम एतद्वनमागमिष्यति पूता तदा भविष्यसि ।

हे राम ! इममाश्रमं देवरूपिणीमहल्यां चाधुना तारय। इत्येवं विश्वामित्रस्यर्षेर्वचनं श्रुत्वा सलक्ष्मणो राम आश्रमं प्रविवेश। तत्र तपस्विनीं दीप्तामहल्यां रामो ददर्श। रामस्य दर्शनेन साऽहल्या पूता भूत्वा पूर्ववद्रूपसंपन्ना बभूव । रामस्य दर्शनादेव शापस्यान्तं गता साऽहल्या।

गौतमवचनं स्मरन्ती साऽहल्या रामलक्ष्मणयोः पाद्यमर्घ्यमातिथ्यं च चकार।

रामलक्ष्मणावपि तपोबलविशुद्धायास्तस्या अहल्याया पादौ जगृहतु ।

गौतमोऽपि तदा तत्रागत्य रामं विधिवत् संपूज्य पूर्ववत्तप-स्तेपे ।

ततो रामो लक्ष्मणेन सह विश्वामित्र पुरस्कृत्य उत्तरा दिश प्रस्थित ।

मिथिलापती राजा जनकस्तु तच्छ्रुत्वा विनयेन सहसा प्रत्युज्जगाम । तेन जनकेन दत्तं पूजार्घं प्रतिगृह्य विश्वामित्रो राज्ञ कुशल यज्ञस्य च निर्विघ्नता पप्रच्छ ।

तत्सर्वं निवेद्य राजाऽपि कृताञ्जलिर्मुनि पप्रच्छ काविमौ वीरपुत्राविति ? विश्वामित्रोऽपि सर्वं पूर्वं वृत्तान्त न्यवेदयत् । ततो जनक उवाच– ' धन्योऽनुगृहीतश्चास्मि ' ।

વાચક આ સરળ સસ્કૃત વાચે જો અગાઉના પાઠનો અભ્યાસ બરાબર કર્યો હશે, તો વિશેષ પરિશ્રમ કર્યા વગર આ પાઠ સમજાઇ જશે જો કોઇ જગ્યાએ મુશ્કેલી નડે તો આજ પુસ્તકનો પાઠ ૮-૯ જુઓ, તેમા એ જ વાક્યો પદચ્છેદપૂર્વક આપેલા છે હવે નીચેના વાક્ય વાચો

कश्चिच्चरो विदुरस्य सुहृत्कुशल खनको विविक्ते पाडवानिद वचनमब्रवीत् । अह कुशल खनको विदुरेण प्रहितोऽस्मि । व पाडवाना कि प्रियं कार्यं करवाणीति ?

विदुरेण विश्वासात्प्रच्छन्नमुक्त । इह त्वं पांडवाना श्रेय प्रतिपादयेति । अधुना व कि करवाणि ? कृष्णपक्षे अस्या चतुर्दश्या रात्री पुरोचनस्तव भवनस्य द्वारि हुताशन प्रदास्यति । पुरुषर्षभा पाडवा मात्रा सह प्रदग्धव्या इति तस्य दुर्मतर्धा तराष्ट्रस्य व्यवसितम् ।

हे पाण्डव ! विदुरेण म्लेच्छवाचा किंचिच्च उक्तोऽसि। तत्त्वया च तथेत्युक्तमेतद्विश्वासकारणम्।

सत्यधृति कुन्तीपुत्रो युधिष्ठिरस्तमुवाच । हे सौम्य त्वा विदुरस्य सुहृदमभिजानामि । तथा शुचि प्रियं सदा दृढ-भक्तिकं प्राप्तं त्वामभिजानामि । कवेरविज्ञात किंचित्प्रयोजनं न विद्यते ।

જો આગલા પાઠનો અભ્યાસ સારી રીતે કર્યો હશે તો આ પાઠ સરળતાથી સમજી શકાશે જો કોઈ જગ્યાએ શંકા થાય તો આ જ પુસ્તકનો પાઠ ૧૦મો જુઓ

જો વાચક આ પાઠ વારવાર ધ્યાનથી વાચશે તો સધી છૂટી પાડવાની અને તેનો અર્થ સમજવાની રીત પોતાની મેળેજ સમજી શકશે દરેક પાઠ વારવાર વાચવો એજ સહુ કરતા સરળ માર્ગ છે

હવે આ પાઠમા આવેલી સધી છૂટી પાડી બતાવીએ છીએ-

१ पुराऽहल्या = पुरा अहल्या ।
२ गौतम ऋषि = गौतम ऋषि ।
३ तपोऽतप्यत् = तप अतप्यत् ।
४ इन्द्रो गौतमस्याश्रममेकदाजगाम = इंद्र गौतमस्य आश्रमं एकदा आजगाम ।

५ तदेन्द्रो विषण्णवदनश्चाभवत् = तदा इन्द्रः विषण्णवदनः च अभवत्।

६ एतद्वनं = एतत् वनं।

७ चाधुना = च अधुना।

८ विश्वामित्रस्यर्षेः = विश्वामित्रस्य ऋषेः।

९ रामलक्ष्मणावपि = रामलक्ष्मणौ अपि।

१० कश्चिन्नरः = कः चित् नरः।

११ प्रहितोऽस्मि = प्रहितः अस्मि।

१२ कवेरविज्ञातं = कवेः अविज्ञातं।

એવી રીતે બીજી સંધિઓના વિષયમાં વાંચક વિચાર કરી તથા અગાઉના પાઠ જોઇ સમજવાનો પ્રયત્ન કરે. ધ્યાનપૂર્વક જોવાથી એમાં કોઇ મુશ્કેલી નહીં નડે.

## સંધિ કરેલાં વાક્યો

स देवर्षिर्नारद एवमुक्त्वा विरराम, राजश्रेष्ठो युधिष्ठिरस्तु शोकेन परिप्लुतश्चिन्तयामास, मोहितश्चाभवत्। दीनमनसं शोकोपहतं तमातुरं युधिष्ठिर राजानं माता कुन्ती इदमवोचत्— हे महाराज! त्वमेवं शोचितुं नार्हसि।

—o—:o:—

## પાઠ ૧૨

અકારાન્ત નાન્યતરજાતિના શબ્દોના રૂપ નીચે પ્રમાણે થાય છે—

| | |
|---|---|
| १ मित्रं = મિત્ર | ४ मित्राय = મિત્ર માટે |
| (हे) मित्र != (હે) મિત્ર | ५ मित्रात् = મિત્રથી |
| २ मित्रं = મિત્રને | ६ मित्रस्य = મિત્રનું |
| ३ मित्रेण = મિત્રથી | ७ मित्रे = મિત્રમાં |

માત્ર પહેલી વિભક્તિનું રૂપ પુલ્લિંગથી જુદુ છે. બીજા રૂપ અકારાન્ત પુંલ્લિંગ શબ્દોના જેવાજ છે, એ વસ્તુ અહીં ધ્યાનમાં રાખવા જેવી છે. એજ પ્રમાણે નીચે લખેલા અકારાન્ત નાન્યતર જાતિના શબ્દોના રૂપ થાય છે—

| | |
|---|---|
| पापं = પાપ | औषधं = દવા |
| दर्शनं = દર્શન | तोयं = પાણી |
| कार्पण्यं = કંજુસાઇ | कुसुमं = પુષ્પ |
| कार्यं = કર્તવ્ય | अब्जं = કમળ |
| दुःखं = દુઃખ | चक्रं = પૈડું |
| व्रतं = વ્રત, નિયમ | रूपं = સુંદરતા, સ્વરૂપ |
| दानं = દાન | लावण्यं = સુંદરતા |
| अंतःपुरं = અંદરનો ઓરડો | नेत्रं = આખ |
| हृदयं = હૃદય | सूत्रं = દોરો |

## संस्कृत-वाक्यानि ।

१ पापी मनुष्य· पापात् कथं मुक्तः भवति ? २ तव दर्शनाय अहं अद्य अत्र आगत । ३ दानसमये कार्पण्यं मा कुरु । ४ रुग्णाय औषधं देहि । ५ तृषिताय तोयं देहि । ६ उद्यानात् कुसुमं स आनयति । ७ जले अब्जं भवति । ८ मनुष्य दु ख न वाछति । ९ अहं व्रतं चरिष्यामि । १० सत्यं एव परम व्रतं अस्ति । ११ ज्ञानस्य दानं धनस्य दानात् श्रेष्ठं । १२ गृहस्य मध्ये अंत पुरं भवति । १३ अंत पुरे गृहपत्नी वसति । १४ दुष्टस्य मुखे अमृतं हृदये च विष भवति । १५ पश्य, रथस्य चक्रं कथं भ्रमति ।

## ભાષા-વાક્ય

(૧) પાપી માણુસ પાપથી કેવી રીતે મુક્ત થાય છે? (૨) તારા દર્શન માટે હું આજે અહીં આવ્યો છુ (૩) દાન આપતી વખતે કંજુસાઇ ન કર (૪) રોગીને દવા આપો (૫) તરસ્યાને પાણી આપો (૬) બાગમાથી તે ફૂલ લાવે છે (૭) પ ણીમા કમળ થાય છે (૮) માણુસ દુ ખી થવા ઇચ્છતો નથી (૯) હુ વ્રત કરીશ (૧૦) સત્ય એ જ સાચુ વ્રત છે (૧૧) વિદ્યાનુ દાન ધનના દાનથી ઉત્તમ છે (૧૨)ઘરની વચમા અત પુર હોય છે (૧૩) અ ત પુરમા ગૃહિણી રહે છે (૧૪) દુષ્ટના મુખમા મિઠાશ અને હૃદયમા વિષ હોય છે (૧૫) જો, રથનુ પૈંડુ કેવુ ફરે છે!

संस्कृत-वाक्यानि।

१६वालकस्य रमणीयं रूपं अहं पश्यामि । १७ सः पुरुषः रूपेण बलेन लावण्येन च अतीव सुंदरः अस्ति। १८ तस्य नेत्रं इदानीं रुग्णं जातम्। १९ तत् श्वेतं सूत्रं अत्र आनय।

ભાષા-વાક્ય

(૧૬) બાળકનું સુંદર રૂપ હું જોઉં છું. (૧૭) તે માણસ રૂપ, બળ અને લાવણ્યથી અત્યંત સુંદર છે. (૧૮) તેની આંખ હવે બગડી ગઇ. (૧૯) તે સફેદ દોરો અહીંયા લાવ.

संस्कृत-वाक्यानि।

कविः सूत्रेण यज्ञोपवीतं करोति । यथा स नेत्रेण रूप पश्यति तथा कर्णेन शब्दं शृणोति । तस्य स्वरूपं पश्य। यंत्रस्य चक्रं इदानीं न भ्रमति। सः यंत्रस्य चक्रं कदा भ्रामयिष्यति ? हृदयं शुद्धं कुरु। तत्र पापं मा अस्तु। यथा अंत:पुरे पुत्री भ्रमति तथा गृहाद् बहिः पुत्रः भ्रमति। दानेन पुण्यं भवति वा न ? यदि दानेन पुण्यं भवति, तर्हि त्वं दानं किं न करोषि ?

વાચક આ પાઠ વાચે અને પોતે મનથી ઉપરના શબ્દોના વાક્યોમાં પ્રયોગ કરે, અને બની શકે ત્યાં સંધીઓ બનાવવાનો પ્રયત્ન કરે.

—o— o·—o—

## પાઠ ૧૩

### संस्कृत-वाक्यानि।

१ जनकः उवाच- हे मुनिपुंगव ! अत्र अस्ति धनुष्यं शंकरस्य। २ क्षेत्रं कृपतः मे लांगुलात् उत्थिता एका सुता च अस्ति। ३ क्षेत्रं शोधयता लब्धा अतः सा सीता इति नाम्ना विश्रुता। ४ सा इदानीं स्वयंवरयोग्या संजाता। ५ वर्धमानां तां सीतां सर्वे राजानः अत्र आगत्य वरयितुं इच्छन्ति। ६ वरयितुं इच्छतां अपि तेषां कन्यां न ददामि वीर्यशुल्का इति। ७ सर्वे नृपतयः वीर्यं जिज्ञासवः अत्र उपागच्छन्। ८ तेषां पुरस्तात् मया शैवं धनुः उपाहृतम्। ९ तस्य ग्रहणे तोलने अपि वा ते नृपाः न शेकुः।

### ભાષા-વાક્ય

(૧) જનક બોલ્યા કે હે મુનિ (પુંગવ) શ્રેષ્ઠ! અહીંયા છે શંકરનું ધનુષ્ય. (૨) ખેતર (कृपतः) ખેડનાર મારા હળથી ઉત્પન્ન થએલી એક પુત્રી પણ છે. (૩) ખેતરની શોધ કરનારાએ (लब्धा) પ્રાપ્ત કરી તેથી તે સીતાના નામથી (विश्रुता) પ્રસિદ્ધ છે. (૪) તે હવે સ્વયંવરને યોગ્ય થઇ છે. (૫) મોટી થતી એ સીતાને બધા રાજા અહીંયાં આવી વરવા ઇચ્છે છે. (૬) પણ વરવાની ઇચ્છા ધરાવનારા તેઓ(રાજાઓ) ને હું કન્યા નથી આપતો. (કારણકે) આ (विर्य शुल्का) વીર્યના બળથી લેવા યોગ્ય છે. (૭) બધા રાજાઓ શૌર્યની જીજ્ઞાસા કરી અહીં આવી ચુકયા (૮) તેમની સામે હું શિવજીનું ધનુષ્ય લાવ્યો.(૯) તેને પકડવા અને તેને ઉઠાવવામાં પણ તે રાજાઓ સમર્થ ન હતાં.

### संस्कृत-वाक्यानि।

१० तत् एतत् परमभास्वरं धनुः रामलक्ष्मणयोः च अपि दर्शयिष्यामि। ११ रामः यदि अस्य आरोपणं कुर्यात् अहं सीतां तस्मै दद्याम्। १२ ततः जनकेन समादिष्टाः सचिवाः प्रयासेन धनुं तत्र आनयामासुः। १३ महर्षेः वचनात् तत्र धनुः दृष्ट्वा रामः अब्रवीत्। १४ इदं दिव्यं धनुः पाणिना संस्पृशामि। तस्य तोलने पूरणे अपि यत्नवान् च भविष्यामि।

### ભાષા-વાક્ય

(૧૦) તે આ પરમ તેજસ્વી ધનુષ્ય રામલક્ષ્મણને પણ હું બતાવીશ. (૧૧) રામ જો એની ઉપર (आरोपणं) દોરી ચઢાવશે, તો હું સીતા તેને આપીશ. (૧૨) ત્યારે જનકની આજ્ઞાનુસાર મંત્રીઓ પ્રયત્ન કરી ધનુષ્યને ત્યાં લાવવા લાગ્યા. (૧૩) મહર્ષિના વચનોથી તે ધનુષ્ય જોઇ રામ બોલ્યા. (૧૪) આ દિવ્ય ધનુષ્યને (पाणिना) હાથથી સ્પર્શ કરૂ છું. તેને તોલવા અને પૂર્ણ કરવાનો પણ પ્રયત્ન કરીશ:

### સંધિ કરેલાં વાક્યો

जनक उवाच-हे मुनिपुंगव! अत्रास्ति धनुष्यं भगवतो महादेवस्य। क्षेत्रं कृषतो मे लांगलादुत्थितैका सुता चास्ति। क्षेत्रं शोधयता सा लब्धा। अतः सा सीतेति नाम्ना विश्रुता। सेदानीं स्वयंवरयोग्या संजाता।

—::०::—

# પાઠ ૧૪

## सस्कृत-वाक्यानि ।

१ एवं उक्त्वा राम धनु मध्ये जग्राह । लीलया पूरयामास च । २ यदा रामेण मौर्वी आरोपिता तदा तत् धनु बभञ्ज च । ३ तदा राजा जनक प्राजलि विश्वामित्रं उवाच । ४ अत्यद्भुतं इद । अचिन्त्यं अतर्कित च मया । ५ मे सुता सीता रामं भर्तार प्राप्य कीर्तिं आहरिष्यति । ६ मे मंत्रिणः शीघ्र अयोध्या गच्छन्तु । राजानं दशरथं च अत्र आनयन्तु । ७ एवं समादिष्टा दूता त्रिरात्रेण अयोध्या प्राविशन् । ८ वृद्धं दशरथ राजान जनकस्य कृते कुशलं च पप्रच्छ । ९ तव पुत्रेण रामेण सीता निर्जिता ।

### ભાષા વાક્ય

(૧) એમ કહીને રામે ધનુષ્યને વચમાથી ધર્યું અને લીલાથી પૂર્ણ કર્યું (૨) જ્યારે રામે ( मौर्वी ) દોરી ચઢાવી, ત્યારે તે ધનુષ્ય ( बभञ्ज ) તૂટી ગયુ (૩) ત્યારે રાજા જનકે હાથ જોડી વિશ્વામિત્રને કહ્યુ (૪) અતિ અદ્ભુત આ છે, અચિંત્ય અને મારાથી અતર્કિત છે (૫) મારી પુત્રી સીતા રામને પતિ તરીકે પ્રાપ્ત કરી કીર્તિ કમાશે (૬) મારા મંત્રી તરતજ અયોધ્યા જાય અને રાજા દશરથને અહિં લઇ આવે (૭) આ પ્રમાણે આજ્ઞા પામેલા દૂત ત્રણ રાત્રી પછી અયોધ્યામા પ્રવિષ્ટ થયા (૮) વૃદ્ધ દશરથ રાજા જનક માટે કુશળ પૂછવા લાગ્યા (૯) તારા પુત્ર રામે સીતાને જીતી લીધી છે

